# भूमिका

साम्प्रतं स्वतन्त्रभारतेऽस्मिन् संस्कृतभाषायाः पठन-पाठनमधोगतिमेवागच्छद् दृष्टिगोचरीभवति । पुनरपि केचन आर्या महापुरुषाः संस्कृतभाषामुन्नेतुं बद्धपरिकराः सततं प्रयत्नशीलाश्च विलोक्यन्ते । येषां सत्पुरुषार्थेन ऋषिदयानन्दोपदिष्टपठनपाठनविधिमनुसृत्य बालकानां बालिकानां च पृथक् पृथक् कानिचिद् गुरुकुलानि प्रचलन्ति । तत्र शिक्षा-कल्प-व्याकरण-निरुक्त-छन्दोवेदाङ्गानां सांख्य-योग-न्याय-वैशेषिक-वेदान्तवेदोपाङ्गानां वैदिकवाङ्मयस्य चाध्ययनाध्यापनस्यास्ति सुप्रबन्धः । प्राचीनव्याकरणन्तु तत्र विशिष्याध्याप्यते । स्वरविषयमभिलक्ष्य फिट्सूत्रपाठोऽपि समधीयते । परन्तु फिट्सूत्राणां बालसुबोधिनी नैव काचिट्टीका समुपलभ्यते । भट्टोजिदीक्षितकृतायां सिद्धान्तकौमुद्यां प्राप्यते फिट्सूत्राणां संक्षिप्तं व्याख्यानम् । परं तदपर्याप्तमिति बालैर्वृद्धैश्च पठनपाठने महदसौकर्यमनुभूयते । तदेवासौकर्यमपाकर्तुमयं **फिट्सूत्रप्रदीपः** स्वरमर्मजिज्ञासूनां पाठकानां सेवायां समोदं प्रस्तूयते ।

श्रीदयानन्द उपदेशकमहाविद्यालय
गुरुकुल भटिण्डा (पंजाब)
२ । ६ । १९६६.

विनीतः—
—**सुदर्शनदेव आचार्यः**



भारतप्रशासनशिक्षामन्त्रालये संस्कृत पारिषद्यः
महामना तपस्वी ऋषिकल्पः
आचार्यो भगवान्देवः



स्वर्गीयः पण्डितो विश्वप्रियः शास्त्री
महावैयाकरणः

# परिचयः

**फिट्सूत्रकारपरिचय :—**

पाणिनीयसम्प्रदाये फिट्सूत्राणां प्रवक्ताऽऽचार्यः शान्तनुरित्यङ्गीक्रियते। अत एवेमानि शान्तनवसूत्राणीत्यभिधीयन्ते। तथा च—'स पुनः शान्तनुप्रणीतः फिष्' इति प्राह पदमञ्जर्यां हरदत्तः। को ऽयं शान्तनुराचार्यः? कश्चास्य काल इत्यादिवृत्तं वर्तते तमसावृतम्। पुनरपीदमुररीक्रियते यदितिहासप्रसिद्धस्य भीष्मपितामहस्य जनको राजर्षिशान्तनुराचार्य एवैषां फिट्सूत्राणां प्रवक्तेति। यस्य चेयमस्ति पुराणप्रोक्ता वंशलता—

> जयसेनस्तत्तनयो राधिकोऽतोऽयुतोऽथाभूत्,
> ततश्चाक्रोधनस्तस्माद् देवातिथिरमुष्य च ॥
> ऋक्षस्तस्य दिलीपोऽभूत् प्रतीपस्तस्यात्मजः,
> देवापिः शान्तनुस्तस्य वाह्लीक इति चात्मजाः ॥

जयसेन—राधिक—अयुत—अक्रोधन—देवातिथि—ऋक्ष—दिलीप—प्रतीपा इति सन्ततिपरम्परा। प्रतीपस्य च देवापि शान्तनु—वाह्लीका आत्मजा बभूवुः। शान्तनुश्च गङ्गायां भीष्मं देवव्रतं जनयामास। अयमेव शान्तनुर्बहुभिः शन्तनुर्नाम्नाऽऽहृतः ॥

**फिट्सूत्राणां कालपरिचय :—**

श्रीपतञ्जलिप्रणीते व्याकरणमहाभाष्येऽन्यत्र चानेकानि सन्त्येवं विधानि स्थलानि यैरनुमीयते यत् फिट्सूत्राणि महर्षिपतञ्जलितो वर्तन्ते पूर्ववर्तीनि। तानि चेमानि—

(क)—प्रत्ययस्वरस्यावकाशो यत्रानुदात्ता प्रकृतिः—समत्वम् सिमत्वम्। ६। १। १५८॥

अत्र भगवान् भाष्यकारः सम–सिमयोः सर्वानुदात्तत्वमुपदिदेश। अनयोः सर्वानुदात्तत्वम् 'त्वत्त्वसमसिमेत्यनुच्चानि' (फि० ४। १०) इति फिट्सूत्रेषूपलभ्यते न तु पाणिनीयव्याकरणे।

(ख)—इदं पुनरस्ति प्रातिपदिकस्यान्तोदात्तो भवतीति। सो ऽसौ लक्षणेनान्तोदात्तः॥ ६। १। १२३॥

अत्र भाष्ये 'फिषो' ऽन्तोदात्तः (फि० १। १) इति सूत्रस्यैवायमनुवाद इति लक्ष्यते।

(ग)—स्वरितकरणसामर्थ्यान्निभविष्यति—'न्यङ्स्वरौ स्वरितौ' इति॥
१। २। ३॥

अत्र तु भाष्यकारेण 'साक्षादेव "न्यङ्स्वरौ स्वरितौ (फि० ४। ६) इति फिट्सूत्रमिदमुद्धृतम्। अतः स्पष्टमिदं यद् आचार्यशान्तनुप्रणीतानि फिट्सूत्राणीमानि भगवत्पतञ्जलितः पूर्वतनानि।

(घ)"एष प्रत्याहारः पूर्वव्याकरणेष्वपि स्थित एव। अयं तु विशेषः:—ऐ औष् यदासीत् तद् ऐ औच् इति कृतम्। तथाहि—लघावन्ते द्वयोश्च बह्वषो गुरुः। (फि० २। १९) तृणधान्यानां च द्व्यषाम् (फि० २। ४) इति पठ्यते"

आचार्यचन्द्रगोमिनामुल्लेखेनानेन विज्ञायते यद् अच्–प्रत्याहारस्य स्थाने अष् प्रत्याहारस्य प्रयोक्ता फिट्सूत्रकारः शान्तनुराचार्यः पाणिनितोऽपि प्राचीन इति।

एवमेभिः प्रमाणैर्निश्चीयते यत् फिट्सूत्राणां प्रवचनकालो नूनं विक्रमतो वर्षाणां त्रिसहस्रोत्तरं शतम् (३१००) प्राग् ववर्तीति। फिट्सूत्राणां प्रवक्ता च राजर्षिराचार्यो विद्वान् शान्तनुरिति शक्यते वक्तुम्।

ग्रन्थसंज्ञापरिचय :—

पाणिनीयव्याकरणे "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" (१।२।४५) इत्यनेनार्थवतां शब्दानां प्रातिपदिकसंज्ञा विधीयते। तदेव प्रातिपदिकं शान्तनव-

शास्त्रे फिष् इति संज्ञायते । तद्यथा—'अर्थवदधातुरप्रत्ययः फिष् । कृत्तद्धित-समासाश्च' इति । अत एव प्रातिपदिकानां स्वरविधानशास्त्रमिदं 'फिट्' इति नाम्ना प्रसिद्धम् ।

एषां फिट्सूत्राणामनुशीलनेन विज्ञायते यत् साम्प्रतं हस्तगतमिदं फिट्सूत्रसमाख्यं तन्त्रं न स्वतन्त्रम् । अपितु कस्यचिद् ग्रन्थस्यावशेषः । यतो हि समुपलब्धेऽस्मिन् फिट्सूत्रपाठे काश्चनैवंविधाः संज्ञा उपलभ्यन्ते यासामत्र लक्षणं नैवास्ति कृतम् । शास्त्रे प्रयुज्यमानानां संज्ञानां पूर्वं लक्षणोल्लेखः परमावश्यकीयो भवति । लक्षणज्ञानमन्तरा तत्र तत्र संज्ञार्थप्रतीतिः कथं स्यात् ? ताः संज्ञाश्चेमा :— १–फिष् = प्रातिपदिकम् । २–नप् = नपुंसकम् । ३–यमन्वा = वृद्धम् । शिट् = सर्वनाम । स्फिग् = लुप् (पाठान्तरे) ॥

फिट्सूत्रेषु केषांचन प्रत्याहाराणामपि प्रयोग उपलभ्यते । प्रत्याहाराणामर्थपरिज्ञानार्थे प्रत्याहारसूत्राणामपि निर्देशो नितरामावश्यकीयः । ते च प्रयुक्तप्रत्याहारा इमे— १—अष् = अच् (स्वराः) । २—खय् = खय् (वर्गाणां प्रथमद्वितीयाः) । ३—हय् = हल् (व्यञ्जनानि) ।

फिटसूत्रस्यानेनान्तरिकसाक्ष्येणावसीयते यत् कस्यचिद् बृहद्ग्रन्थस्य भग्नावशेषोऽयं शान्तनवः फिट्सूत्रपाठ इति ।

---

* ओ३म् *

# अभिशंसनम्

अयं खलु 'फिट्सूत्रप्रदीपः' चतुर्भिः पादैर्विभक्तो वर्तते । उदात्तादि-स्वरानवगमयितुं तेषु च प्रौढतामुद्वलयितुं वृत्तिकारस्यायं प्रयत्नः सर्वथैव प्रशंसनमापत् । भाषायाः सारल्यं सूत्रार्थनिरूपणस्य च रुचिरा शैलीत्येवमादि दर्शं दर्शं पुस्तकस्योपादेयतां महर्घतां चाध्यवस्यामि स्वरैणार्थविशेषाणां वेत्तृभ्यः शब्दपारं गन्तृभ्यश्च ।

पुरा किलोभयत्र लौकिकेषु वैदिकेषु च शब्देष्ववितथार्थस्यावबोधायोदात्तादिस्वराङ्कनप्रकारस्य प्रचारो बभूव । परमेतर्हि वैदिकेष्वेवासाववलोक्यते । भाषाशब्देषु सा परम्परेदानीं सर्वथैव लोपमाभजमाना दृष्टिपथमायाति । स्वर-सहितानां श्रुत्यक्षराणामपि कथमुच्चारणं भवतीति न विदन्ति मादृशस्त्वादृशो-ऽन्यादृशो वा पुरुषाः ।

स्वराणामेषां ध्वनिविषये पुरापि वै भ्रमाः सञ्जज्ञिरे, किं पुनरद्यत्वे । यथा व्याजहार महर्षिः पतञ्जलिर्व्याकरणमहाभाष्ये—इदमुच्चनीचमनवस्थित-पदार्थकम् । तदेवकञ्चित्प्रत्युच्चैर्भवति कञ्चित्प्रति नीचैः । एवं हि कश्चित्कञ्चिद-धीयानमाह—किमुच्चै रोरूयसे नीचैर्वर्ततामिति, तमेव तथाधीयानमपर आह—किमन्तर्दन्तकेनाधीषे उच्चैर्वर्ततामिति । एवमुच्चनीचमनवस्थितपदार्थकम् । तस्या-नवस्थितत्वात् (उदात्तादि) संज्ञाया अप्रसिद्धिः ।

एवं तर्हि लक्षणं करिष्यते—आयामो दारुण्यमणुता खस्येति उच्चैः-कराणि शब्दस्य । आयामः-गात्राणां निग्रहः । दारुण्यम्-स्वरस्य दारुणता रूक्षता । अणुता-खस्य (कण्ठस्य) संवृतता । उच्चैः कराणि शब्दस्य ।

अन्ववसर्गो मार्दवमुरुता खस्येति । नीचैः कराणि शब्दस्य । अन्ववसर्गः = गात्राणां शिथिलता । मार्दवम्—स्वरस्य मृदुता स्निग्धता । उरुता—खस्य ( कण्ठस्य ) महत्त्वेति । नीचैः कराणि शब्दस्य ।

एतदप्यनैकान्तिकम् । यद्धयल्पप्राणस्य सर्वोच्चैस्तद्धि महाप्राणस्य सर्वनीचैः ।

सिद्धन्तु समानप्रक्रमवचनात्

सिद्धमेतत् । कथम् ? समाने प्रक्रम इति वक्तव्यम् । कः पुनः प्रक्रमः ? उरः कण्ठः शिर इति । ( १ । २ । २९—३० पाणिनीयसूत्रोपरि )

कैयटश्चात्रसमाचष्ट—अभ्याससमधिगम्यश्चायं स्वरविशेषः षड्जादिवद् विज्ञेय इति ।

तदेवं मा भूत् तावत् स्वरध्वनिज्ञानं महता कालेन तस्य नष्टत्वात् पुनरप्यर्थावगत्यै चिह्नाङ्कित उदात्तादिबोधस्त्वावश्यक एव । अस्यापि सम्प्रदायो लुप्ततां नाप्नुयादिति शब्दस्वरव्याख्यात्मकं पुस्तकमिदं प्राथमकल्पिकम् । प्रयासो ऽप्ययमेतादृशः सुगमः स्वररक्षायै नूतन एव । एष हि प्रत्नां शिक्षणसृतिमनुशीलकेषु विद्यासंस्थानेष्वध्येतॄणां छात्राणां तरसा स्वरविषयकं महत्काठिन्यमद्धा अपाकरिष्यतीति निश्चप्रचम् । तदनेन श्रमेणात्युपकृता अध्येतारोऽध्यापयितारश्च शेमुषीजुषोऽस्य सुदर्शनदेवाचार्यस्य विदुषो यावदायुषि भविष्यति च यशः शिष्यगुरुक्रमेण तनिषीरन्निति कामयते—

**स्वा० वेदानन्दो वेदवागीशः**

प्रस्तोता—श्रीमद्दयानन्दार्षविद्यापीठस्य

उपाचार्यश्च झज्जरगुरुकुलस्य ।

शान्तनवाचार्यप्रणीतः

# ॥ फिट् — सूत्र — पाठः ॥

## ॥ अथ प्रथमः पादः ॥

१—फिषोऽन्त उदात्तः ।

२—पाटलापालङ्काम्बासागरार्थानाम् ।

३—गेहार्थानामस्त्रियाम् ।

४—गुदस्य च ।

५—ध्यपूर्वस्य स्त्रीविषयस्य ।

६—खान्तस्याश्मादेः ।

७—बंहिष्ठवत्सरतिशत्थान्तानाम् ।

८—दक्षिणस्य साधौ ।

९—स्वाङ्गाख्यायामादिर्वा ।

१०—छन्दसि च ।

११—कृष्णस्यामृगाख्या चेत् ।

१२—वा नामधेयस्य ।

१३—शुक्लगौरयोरादिः ।

१४—अङ्गुष्ठोदकबकवशानां छन्दस्यन्तः ।

१५—पृष्ठस्य च ।

१६—अर्जुनस्य तृणाख्या चेत् ।

१७—अर्यस्य स्वाम्याख्या चेत् ।

१८—आशाया अदिगाख्या चेत् ।

१९—नक्षत्राणामाब्विषयाणाम् ।

२०—न कुपूर्वस्य कृत्तिकाख्या चेत् ।

२१—घृतादीनां च ।

२२—ज्येष्ठकनिष्ठयोर्वयसि ।

२३—बिल्वतिष्ययोः स्वरितो वा ।

॥ इति फिटसूत्रेषु प्रथमः पादः ॥

## ॥ अथ द्वितीयः पादः ॥

१—अथादिः प्राक् शकटेः ।

२—ह्रस्वान्तस्य स्त्रीविषयस्य ।

३—नब्विषयस्यानिसन्तस्य ।

४—तृणधान्यानां च द्व्यषाम् ।

५—त्रः संख्यायाः ।

६—स्वाङ्गशिटामदन्तानाम् ।

७—प्राणिनां कुपूर्वम् ।

८—खय्युवर्णं कृत्रिमाख्या चेत् ।

९—उनर्वन्नन्तानाम् ।

१०—वर्णानां तणतिनितान्तानाम् ।

११—ह्रस्वान्तस्य ह्रस्वमनृत्ताच्छील्ये ।

१२—अक्षस्यादेवनस्य ।

१३—अर्धस्यासमद्योतने ।

१४—पीतद्र्वर्थानाम् ।

१५—ग्रामादीनां च ।

१६—लुबन्तस्योपमेयनामधेयस्य ।

१७—न वृक्षपर्वतविशेषव्याघ्रसिंहमहिषाणाम् ।

१८—राजविशेषस्य यमन्वा चेत् ।

१९—लघावन्ते द्वयोश्च बह्वषो गुरुः ।

२०—स्त्रीविषयवर्णाक्षुपूर्वाणाम् ।

२१—शकुनीनां च लघुपूर्वम् ।

२२—नर्तुप्राण्याख्यायाम् ।

२३—धान्यानां च वृद्धक्षान्तानाम् ।

२४—जनपदशब्दानामषान्तानाम् ।

२५—हयादीनामसंयुक्तलान्तानामन्तः पूर्वं वा ।

२६—इगन्तानां च द्व्यषाम् ।

॥ इति फिट्सूत्रेषु द्वितीयः पादः ॥

## ॥ अथ तृतीयः पादः ॥

१—अथ द्वितीयं प्रागीषात् ।
२—त्र्यचां प्राङ् मकरात् ।
३—स्वाङ्गानामकुर्वादीनाम् ।
४—मादीनां च ।
५—शादीनां शाकानाम् ।
६—पान्तानां गुर्वादीनाम् ।
७—युतान्यण्यन्तानाम् ।
८—मकरवरूढपारेवतवितस्तेक्ष्वार्जिद्राक्षाकलोमाकाष्ठापेष्ठाकाशीनामादिर्वा ।
९—छन्दसि च ।
१०—कर्दमादीनां च ।
११—सुगन्धितेजनस्य ते वा ।
१२—नपः फलान्तानाम् ।
१३—यान्तस्यान्त्यात्पूर्वम् ।
१४—थान्तस्य च नालघुनी ।
१५—शिशुमारोदुम्बरबलीवर्दोष्ट्रारपुरूरवसां च ।
१६—सांकाश्यकाम्पिल्यनासिक्यदार्वाघाटानाम् ।
१७—ईषान्तस्य हयादेरादिर्वा ।
१८—उशीरदाशेरकपालपलालशैवालश्यामाकशारीरशरावहृदयहिरण्यारण्यापत्यदेवराणाम् ।
१९—महिष्यषाढयोर्जायेष्टकाख्या चेत् ।

॥ इति फिट्सूत्रेषु तृतीयः पादः ॥

## ॥ अथ चतुर्थः पादः ॥

१—शकटिशकट्योरक्षरमक्षरं पर्यायेण ।
२—गोष्ठजस्य ब्राह्मणनामधेयस्य ।
३—पारावतस्योपोत्तमवर्जम् ।
४—धूम्रजानुमुञ्जकेशकालवालस्थालीपाकानामधूजलस्थानाम् ।
५—कपिकेशहरिकेशयोश्छन्दसि ।
६—न्यङ्स्वरौ स्वरितौ ।
७—न्यर्बुदव्यल्कशयोरादिः ।
८—तिल्यशिक्यकाश्मर्यधान्यकन्याराजन्यमनुष्याणामन्तः ।
९—बिल्वभक्ष्यवीर्याणिच्छन्दसि ।
१०—त्वत्त्वसमसिमेत्यनुच्चानि ।
११—सिमस्याथर्वणेऽन्त उदात्तः ।
१२—निपाता आद्युदात्ताः ।
१३—उपसर्गाश्चाभिवर्जम् ।
१४—एवादीनामन्तः ।
१५—वाचादीनामुभावुदात्तौ ।
१६—चादयोऽनुदात्ताः ।
१७—यथेति पादान्ते ।
१८—प्रकारादिद्विरुक्तौ ।
१९—शेषं सर्वमनुदात्तम् ।

॥ इति फिट् सूत्रेषु चतुर्थः पादः ॥

॥ इति आचार्यशान्तनुप्रणीतः फिट्सूत्रपाठः ॥

---

* परमात्मने नमः *

# ॥ अथ फिट्सूत्रप्रदीपः ॥

तत्र

## प्रथमः पादः

### फिषोऽन्त उदात्तः ॥ १ ॥

फिषः ६।१ अन्तः १।१ उदात्तः १।१॥

फिडिति पूर्वाचार्यकृता प्रातिपदिकस्य संज्ञा। फिषः=प्रातिपदिकस्यान्त उदात्तो भवति ॥ तद्यथा—उच्चैः। नीचैः॥

अत्र प्रातिपदिकस्य अन्तोदात्ते कृते 'अनुदात्तं पदमेकवर्जम्' इति शेषस्यानुदात्तत्वम् ॥

### पाटलाऽपालङ्काम्बासागरार्थानाम् ॥ २ ॥

पाटला-अपालङ्क-अम्बा-सागरार्थानाम् ६।३॥ इहार्थशब्दः प्रत्येकमभिसम्बध्यते। फिषः, अन्तः, उदात्त इत्यनुवर्तते। पाटलार्थानाम्, अपालङ्कार्थानाम्, अम्बार्थानां प्रातिपदिकानाम् अन्त उदात्तो भवति। पाटलार्थानां तावत्—पाटला। फलेरुहा इत्यादि।

पाटलिः पाटलाऽमोघा मधुदूती फलेरुहा।
कृष्णवृन्ता कुबेराक्षी कालस्थाल्यलिवल्लभा॥

इति भावप्रकाशः।

अपालङ्कार्थानां तावत्—अपालङ्कः। व्याधिघातः। आरेवतः। आरग्वधः।

आरग्वधो राजवृक्षः शम्याकश्चतुरङ्गुलः।
आरेवतो व्याधिघातः कृतमालः सुवर्णकः॥

इति भावप्रकाशः।

अम्बार्थानां तावत्—अम्बा। माता॥ सागरार्थानां तावत्—सागरः। समुद्र इत्यादि॥

समुद्रः। अब्धिः। अकूपारः। पारावारः। सरित्पतिः। उदन्वान्। उदधिः। सिन्धुः। सरस्वान्। सागरः। अर्णवः। रत्नाकरः। जलनिधिः। यादःपतिः। अपांपतिः। इति पञ्चदश समुद्रमात्रस्य॥

## गेहार्थानामस्त्रियाम्॥ ३॥

गेह—अर्थानाम् ६।३ अस्त्रियाम् ७।१॥ फिषः, अन्तः, उदात्त इत्यनुवर्तते। स्त्रीलिङ्गवर्जितानां गेहार्थानां प्रातिपदिकानाम् अन्त उदात्तो भवति। तद्यथा—गेहम्। गृहम् इत्यादि॥ गृहम्। गेहम्। उदवसितम्। वेश्म। सद्म। निकेतनम्। निशान्तम्। पस्त्यम्। सदनम्। भवनम्। अगारम्। मन्दिरम्। गृहाः। निकाय्यः। निलयः। आलयः। इति षोडश गृहस्य॥ अस्त्रियामिति किमर्थम्? शाला। अस्मादेव ज्ञापकात् स्त्रियां वर्तमानस्य गेहार्थस्य शालाशब्दस्याद्युदात्तत्वम्। ततः 'अनुदात्तं पदमेकवर्जम्' इत्नुयदात्तत्वे 'उदात्तादनुदात्तस्य स्वरितः' इति स्वरितत्वम्॥

## गुदस्य च ॥ ४ ॥

गुदस्य ६ । १ च अ० ॥ अस्त्रियामिति च फिषः, अन्तः, उदात्त इति चानुवर्तते । स्त्रीलिङ्गवर्जितस्य गुदस्य प्रातिपदिकस्य अन्त उदात्तो भवति ॥ तद्यथा—गुदम् ॥ [ गुदम् । अपानम् । पायुः ] इति विष्ठानिर्गमद्वारस्य ॥ अस्त्रियामिति किमर्थम् ? 'आन्त्रेभ्यस्त्वा गुदाभ्यः' ।

## ध्यपूर्वस्य स्त्रीविषयस्य ॥ ५ ॥

ध्-य-पूर्वस्य ६ । १ स्त्री-विषयस्य ६ । १ ॥ फिषः, अन्तः, उदात्त इत्यनुवर्तते । स्त्रीविषयस्य प्रातिपदिकस्य धकारपूर्वो यकारपूर्वश्च यो ऽच् स उदात्तो भवति । धकारपूर्वस्तावत्—अन्तर्धा । यकारपूर्वस्तावत्—छाया । माया । जाया । इत्यादि ॥ स्त्रीविषयस्येति किमर्थम् ? बाह्यम् । यञन्तत्वादाद्युदात्तत्वम् । विषयग्रहणं किम् ? इभ्या । क्षत्रिया । यतोऽनाव इति इभ्यशब्द आद्युदात्तः । 'यान्तस्यान्त्यात् पूर्वम्' इति क्षत्रियशब्द मध्योदात्तः । विषयग्रहणं नित्यस्त्रीलिङ्गार्थम् । इभ्य–क्षत्रियशब्दयोर्नित्यस्त्रीलिङ्गाभावात् सूत्रोक्तस्वरो न प्रवर्त्तते ।

## खान्तस्याश्मादेः ॥ ६ ॥

ख-अन्तस्य ६ । १ अ-श्-म्-आदेः ६ । १ ॥ फिषः, अन्तः, उदात्त इत्यनुवर्तते । अशकारादेरमकारादेश्च खकारान्तस्य प्राति-

पदिकस्यान्त उदात्तो भवति। तद्यथा — नखम्। मुखम्। दुःखम्। उखा ॥

इह नखशब्दस्य 'स्वाङ्गशिटामदन्तानाम्' इत्याद्युदात्तत्वे प्राप्ते, सुखदुःखशब्दयोश्च 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्तत्वे प्राप्ते, उखा शब्दस्य तु 'खय्युवर्णं कृत्रिमाख्या चेत्' इत्याद्युदात्तत्वे प्राप्ते 'खान्तस्याश्मादेः' इत्यनेन अन्तोदात्तत्वं विधीयते ॥

अश्मादेरिति किमर्थम्? शिखा। मुखम् ॥ शिखाशब्दस्य 'शीङः खो निदह्रस्वश्च' 'शीङोह्रस्वश्च' उ० ५। २५ इति खप्रत्ययस्य नित्त्वाद् 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वम्। मुखशब्दस्य तु 'स्वाङ्गशिटामदन्तानाम्' इत्याद्युदात्तत्वम् ॥

हिष्ठवत्सरतिशत्थान्तानाम् ॥ ७ ॥

हिष्ठ-वत्सर-ति-शत्-थान्तानाम् ६। ३ ॥ अन्तशब्दः प्रत्येकमभिसम्बध्यते। फिषः, अन्तः, उदात्त इति चानुवर्तते। हिष्ठान्तस्य, वत्सरान्तस्य, ति-अन्तस्य, शदन्तस्य, थान्तस्य च प्रातिपदिकस्य अन्त उदात्तो भवति ॥ हिष्ठान्तस्य तावत्—बंहिष्ठः। वत्सरान्तस्य तावत्—परिवत्सरः। ति-अन्तस्य तावत्—सप्ततिः। शदन्तस्य तावत्—पञ्चाशत्। थान्तस्य तावत् —प्रभृथः।

बंहिष्ठ इत्यत्र इष्ठन्प्रत्ययस्य नित्वाद् आद्युदात्तत्वे प्राप्ते ऽनेनान्तोदात्तत्वं विधीयते।

## दक्षिणस्य साधौ ॥ ८ ॥

दक्षिणस्य ६ । १ साधौ ७ । १ ॥ फिषः, अन्त, उदात्त इत्यनुवर्तते । साधौ वाच्ये ( प्रावीण्येऽर्थे ) । दक्षिणस्य प्रातिपदिकस्यान्त उदात्तो भवति । तद्यथा—वीणायां दक्षिणः । प्रवीण इत्यर्थः । साधाविति किमर्थम् ? दक्षिणः करः । 'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्' इत्यनेन दक्षिणशब्दस्य व्यवस्थायामसंज्ञायां सर्वनामत्वे 'स्वाङ्गशिटामदन्तानाम्' इत्याद्युदात्तत्वम् ॥

## स्वाङ्गाख्यायामादिर्वा ॥ ९ ॥

स्वाङ्गाख्यायाम् ७।१ आदिः १।१ वा अ० ॥ दक्षिणस्य, फिषः उदात्त इति चानुवर्तते । स्वाङ्गे वाच्ये दक्षिणस्य प्रातिपदिकस्य विकल्पेन आद्युदात्तो भवति । पक्षे चान्तोदात्तः । तद्यथा—दक्षिणो बाहुः । दक्षिणो बाहुः । अत्र पर्यायेणादिरन्तश्चोदात्तः ।

आख्याग्रहणं किमर्थम् ? यस्य दक्षिण इत्याख्या तस्यैव वाऽऽद्युदात्तत्वं यथा स्यात् प्रत्यङ्मुखासीनस्य पुरुषस्य वामपाणिरपि दक्षिणो भवति तत्र वाऽऽद्युदात्तत्वं मा भूदिति ॥

## छन्दसि च ॥ १० ॥

छन्दसि ७ । १ च अ० ॥ दक्षिणस्य, फिष, आदिर्वा, उदात्त इति चानुवर्तते । छन्दसि विषये दक्षिणस्य प्रातिपदिकस्य विकल्पेनादिरुदात्तो भवति । तद्यथा—दक्षिणः । दक्षिणः ॥ अत्र पर्यायेणादिरन्तश्चोदात्तः ।

कृष्णस्यामृगाख्या चेत् ॥ ११ ॥

कृष्णस्य ६।१ अमृगाख्या १।१ चेत् अ० ॥ छन्दसि, फिषः, अन्त, उदात्त इत्यनुवर्तते । छन्दसि विषये कृष्णशब्दस्य प्रातिपदिकस्य अन्त उदात्तो भवति, मृगाख्या चेन्न भवति । तद्यथा—कृष्णानां व्रीहीणाम् । कृष्णो नोनाव वृषभः । अमृगाख्येति किमर्थम् ? कृष्णो रात्र्यै । इह 'वर्णानां तणतिनितान्तानाम्' इत्याद्युदात्तत्वम् ॥

वा नामधेयस्य ॥ १२ ॥

वा अ० । नामधेयस्य ६।१॥ छन्दसि, कृष्णस्य, फिषः अन्त उदात्त इति चानुवर्तते। छन्दसि विषये नामधेयस्य कृष्णस्य प्रातिपदिकस्य विकल्पेनान्त उदात्तो भवति पक्षे चाद्युदात्तः। तद्यथा—अयं वां कृष्णो अश्विना कृष्णो ऋषिः ॥

शुक्लगौरयोरादिः ॥ १३ ॥

शुक्ल-गौरयोः ६।२ आदिः १।१॥ फिष उदात्त इत्यनुवर्तते। शुक्लगौरयोः प्रातिपदिकयोराद्युदात्तो भवति। तद्यथा—शुक्लः। गौरः ॥ नित्यमुदात्तः स्यादित्येके । तेषां मतेऽत्र 'नामधेयस्य' इत्यनुवर्त्तते । ततोऽयमर्थः—नामधेययोः शुक्लगौरयोराद्युदात्तो भवति। तेन 'सरो गौरो यथा पिब' इत्यत्र नामधेयत्वाभावादन्तोदात्तः। दीक्षितस्तु प्राह—"वा इत्यनुवर्तते इति तु युक्तम्। 'सरो गौरो यथा पिब' इत्यत्रान्तोदात्तदर्शनात्"।

## अङ्गुष्ठोदकबकवशानां छन्दस्यन्तः ॥ १४ ॥

अङ्गुष्ठ-उदक-बक-वशानाम् ६।३ छन्दसि ७।१ अन्तः १।१॥ फिषः, उदात्त इत्यनुवर्तते । छन्दसि विषये अङ्गुष्ठ-उदक-बक-वशानां प्रातिपदिकानाम् अन्त उदात्तो भवति । तद्यथा—अङ्गुष्ठः । उदकम् । बकः । वशा ॥ अन्त इत्यनुवर्त्तमाने पुनरन्तग्रहणमादिपदानुवृत्तिशङ्कानिवृत्त्यर्थम् ।

अङ्गुष्ठस्य प्रातिपदिकस्य 'स्वाङ्गानामकुर्वादीनाम्' इति द्वितीयस्योदात्तत्वे प्राप्ते उदकशब्दस्य च 'कर्दमादीनां च' इति आद्यस्य द्वितीयाक्षरस्य च पर्यायेण उदात्तत्वे प्राप्ते बक शब्दस्य च 'प्राणिनां कुपूर्वम्' इत्याद्युदात्ते प्राप्तेऽन्तोदात्तो विधीयते ।

## पृष्ठस्य च ॥ १५ ॥

पृष्ठस्य ६ । १ च अ० ॥ छन्दसि, फिषः, अन्त, उदात्त इति चानुवर्तते । छन्दसि विषये पृष्ठस्य प्रातिपदिकस्यान्त उदात्तो भवति । तद्यथा—पृष्ठं यज्ञेन कल्पताम् ॥ भाषायां तु 'स्वाङ्गशिटामदन्तानाम्' इत्याद्युदात्तो भवति । पृष्ठम् ॥

## अर्जुनस्य तृणाख्या चेत् ॥ १६ ॥

अर्जुनस्य ६।१ तृणाख्या १।१ चेत् अ० ॥ फिषः, अन्त, उदात्त इत्यनुवर्तते । तृणार्थे वर्तमानस्य अर्जुनस्य प्रातिपदिकस्यान्त उदात्तो भवति । तद्यथा—अर्जुनं तृणम् ॥ तृणम् अर्जुनमिति तृणमात्रस्य ।

तृणाख्येति किमर्थम् ? अर्जुनो नाम वृक्षः' 'उनर्वन्नन्तानाम्' इत्याद्युदात्तो भवति ॥

## अर्यस्य स्वाम्याख्या चेत् ॥ १७ ॥

अर्यस्य ६।१ स्वामि-आख्या १।१ चेत् अ०॥ फिषः, अन्त, उदात्त इत्यनुवर्तते । स्वामि अर्थे वर्तमानस्य अर्यस्य प्रातिपदिकस्यान्त उदात्तो भवति । तद्यथा—अ॒र्यः स्वामी ॥ 'यान्तस्यान्त्यात्पूर्वम्' इति प्राप्तमाद्युदात्तत्वं न भवति ।

'अर्यः स्वामिवैश्ययोः (३।१।१०३) इति स्वामिनि वैश्ये चार्थेऽर्यशब्दो यत् प्रत्ययान्तो निपात्यते । तस्य 'यतोऽनावः' इत्याद्युदात्वं प्राप्नोति, अनेन स्वाम्यर्थे वर्तमानस्य अर्यस्य अन्तोदात्तत्वं विधीयते । तथा च वार्तिककारोऽपि प्राह—''स्वामिन्यन्तोदात्तत्वं च वक्तव्यम्' इति ॥

स्वाम्याख्याग्रहणं किमर्थम् ? अर्यो वैश्यः । 'यतोऽनावः' इत्याद्युदात्तो भवति ॥

## आशाया अदिगाख्या चेत् ॥ १८ ॥

आशायाः ६ । १ अदिगाख्या १ । १ चेत् अ० ॥ फिषः, अन्त, उदात्त इत्यनुवर्तते । अदिगर्थे वर्तमानस्याशा शब्दस्य प्रातिपदिकस्यान्त उदात्तो भवति । तद्यथा—आ॒शा । तृष्णा इत्यर्थः ।

अदिगाख्याग्रहणं किमर्थम् ? 'इन्द्र आशाभ्यस्परि' (२।४१।१२) इह अस्मादेव ज्ञापकाद् दिगर्थे वर्तमानस्य आशाशब्दस्याद्युदात्तत्वम् ॥

## नक्षत्राणामाब्विषयाणाम् ॥ १९ ॥

नक्षत्राणाम् ६।३ आप्-विषयाणाम् ६।३॥ फिषः, अन्तः, उदात्त इत्यनुवर्तते । आप् विषयसम्बन्धिनां नक्षत्रवाचिनां प्रातिपदिकानाम् अन्त उदात्तो भवति । तद्यथा—आश्लेषा । अनुराधा । श्रविष्ठा । धनिष्ठा । ज्येष्ठा ॥ नक्षत्राणामिति किम् खट्वा । आब्विति किम् अश्विनी ।

आश्लेषा-अनुराधाशब्दयोः 'लघावन्ते द्वयोश्च बह्वषो गुरुः' (२।१९) इति गुरोरुदात्तत्वे प्राप्ते वचनमिति दीक्षितः । तच्च न, उक्तसूत्रस्यात्रप्रवृत्तिसामर्थ्याभावात् । श्रविष्ठा-धनिष्ठा-ज्येष्ठानां च इष्ठन्प्रत्ययान्तत्वादाद्युदात्तत्वे प्राप्तेऽन्तोदात्तत्वमनेन विधीयते ॥

## न कुपूर्वस्य कृत्तिकाख्या चेत् ॥ २० ॥

न अ० कु पूर्वस्य ६।१ कृत्तिका आख्या १।१ चेत् अ० ॥ नक्षत्राणाम्, आब्विषयाणाम् इति, फिषः, अन्त, उदात्त, इति चानुवर्तते । आप्-विषयस्य नक्षत्रवाचिनः कवर्गपूर्वस्य प्रातिपदिकस्यान्त उदात्तो न भवति, कृत्तिकाख्या चेद् भवति । तद्यथा—

कृत्तिका नक्षत्रम् ॥ कुपूर्वस्येति किम् ? बहुला । आख्याग्रहणं किम् ? कृत्तिकासु जाता कृत्तिका माणविका इत्यत्र न भवति। कुपूर्वो य आप् त विषयस्य नक्षत्रवाचिनः प्रातिपदिकस्यान्तोदात्तो न भवति, कृत्तिकाख्या चेत्। इति केचिद् व्याचक्षते। उदाहरणं यथा—आर्यिका। बहुलिका। आर्यिका—बहुलिकाशब्दौ कृत्तिकापर्यायौ।

## घृतादीनां च ॥ २१ ॥

घृतादीनाम् ६।३ च अ० ॥ फिषः, अन्तः, उदात्त इत्यनुवर्तते। घृतादीनां प्रातिपदिकानामन्त उदात्तो भवति। तद्यथा—घृतं मिमिक्षे। वराहः। आदि शब्दः प्रकारार्थे तेन आकृतिगणोऽयम्। अविहितलक्षणमन्तोदात्तं घृतादिषु द्रष्टव्यम् ॥

## ज्येष्ठकनिष्ठयोर्वयसि ॥ २२ ॥

ज्येष्ठ-कनिष्ठयोः ६। २ वयसि ७। १ ॥ फिषः, अन्त, उदात्त इत्यनुवर्तते। वयोऽर्थे गम्यमाने ज्येष्ठ-कनिष्ठ प्रातिपदिकयोरन्त उदात्तो भवति। तद्यथा—ज्येष्ठ आह चमसा। कनिष्ठ आह चतुरः ॥

वयसीति किमर्थम् ? ज्येष्ठः=श्रेष्ठः। कनिष्ठः=अल्पिष्ठः। इह इष्ठन् प्रत्ययस्य नित्त्वाद् 'ञ्नित्यादिर्नित्यम्' इति नित्यमाद्युदात्तो भवति ॥

बिल्वतिष्ययोः स्वरितो वा ॥ २३ ॥

बिल्वतिष्ययोः ६ । २ स्वरितः १ । १ वा अ० ॥ फिषः, अन्त. इत्यनुवर्तते । बिल्व-तिष्ययोः प्रातिपदिकयोर्विकल्पेनान्तः स्वरितो भवति। पक्षे चान्तोदात्तत्वम् । तद्यथा— बिल्वः । बिल्वः ॥ तिष्यः । तिष्यः इति ॥

॥ इति श्रीसुदर्शनदेवाचार्यविरचिते फिट्सूत्रप्रदीपे प्रथमः पादः ॥

---

# अथ द्वितीयः पादः

**अथादिः प्राक् शकटेः ॥ १ ॥**

अथ अ० । आदिः १।१ प्राक् १।१। शकटेः ५।१॥ 'शकटिशकट्योरक्षरमक्षरंपर्यायेण' ( ४।१ ) इति वक्ष्यति । प्रागेतस्मात् प्रातिपदिकस्यादिरुदात्तो भवतीत्यधिकारोऽयं वेदितव्यः ॥ अथ शब्द आद्युदात्तप्रकरणारम्भद्योतकः पादारम्भप्रकाशकश्च ॥

**ह्रस्वान्तस्य स्त्रीविषयस्य ॥ २ ॥**

ह्रस्वान्तस्य ६।१ स्त्रीविषयस्य ६।१॥ फिषः, आदिः उदात्त इत्यनुवर्तते । नित्यं स्त्रियां वर्तमानस्य ह्रस्वान्तस्य प्रातिपदिकस्याद्युदात्तो भवति । तद्यथा—वलिः । तनुः ॥ इह प्रकृतेनाद्युदात्ते कृते अनुदात्तं पदमेकवर्जम्' इति शेषस्यानुदात्तत्वे 'उदात्तादनुदात्तस्य स्वरितः' ( ८।४।५६ ) उदात्तादुत्तरस्यानुदात्तस्य स्वरितो भवतीति स्वरितत्वम् ॥ जरया शिथिलचर्मणि वलिशब्दः शरीरार्थे च तनुशब्दो नित्यं स्त्रीलिङ्गः । ह्रस्वेति किम् ? नदी । स्त्रीति किम् ? मरुः । वायुः । विषयग्रहणं किम् ? लघुः । बहुः ॥

**नब्विषयस्यानिसन्तस्य ॥ ३ ॥**

नप्-विषयस्य ६।१ अनिसन्तस्य ६।१॥ फिषः, आदिः, उदात्त इत्यनुवर्तते । 'नप्' इति नपुंसकलिङ्गस्य संज्ञा । नब्विष-

यस्य=नित्यं नपुंसकलिङ्गे वर्तमानस्य इसन्तभिन्नस्य प्रातिपदिकस्याद्युदात्तो भवति। तद्यथा—वने न वा यः। अनिसन्तस्येति किमर्थम्? सर्पिः। पूर्वसूत्राद् विषयानुवृत्त्यैव सिद्धे पुनर्विषयग्रहणं लिङ्गव्यत्ययेन प्रत्ययलोपेन वा लिङ्गान्तरे संक्रान्तस्याप्ययं स्वरो यथा स्यात्। लिङ्गव्यत्ययेन—मधोस्तृप्ता इवासते। प्रत्ययलोपेन--मध्वस्मिन्नस्तीति मधुमासः। यतो लुक्।

### तृणधान्यानां च द्व्यषाम् ॥ ४॥

तृण-धान्यानाम् ६।३ च अ० द्वि-अषाम् ६।३॥ फिषः, आदिः, उदात्त इत्यनुवर्तते। अष् इति अच्पर्यायः। द्व्यषाम्=द्वि-अच्कानां तृणवाचिनां धान्यवाचिनां च प्रातिपदिकानाम् आद्युदात्तो भवति। तृणवाचिनां तावत्—कुशः। काशः॥ धान्यवाचिनां तावत्—माषः। तिलः॥ द्व्यषामिति किमर्थम्? गोधूमाः।

### त्रः संख्यायाः ॥ ५॥

त्रः ६।१ संख्यायाः ६।१॥ फिषः, आदिः, उदात्त इत्यनुवर्तते। न्रः=नकारान्तस्य रेफान्तस्य च संख्यावाचिनः प्रातिपदिकस्य आद्युदात्तो भवति। नकारान्तस्य तावत्—पञ्च। सप्त॥ रेफान्तस्य तावत्—चतुष्कपालः॥ 'इगन्तकालकपालभगाल०' इति पूर्वपदस्य प्रकृतिस्वरो भवति।

### स्वाङ्गशिटामदन्तानाम् ॥ ६ ॥

स्वाङ्ग शिटाम् ६।३ अदन्तानाम् ६।३ ॥ फिषः, आदिः, उदात्त इत्यनुवर्तते। शिट् इति सर्वनामसंज्ञा। अदन्तानां स्वाङ्गवाचिनां सर्वनामसंज्ञकानां च प्रातिपदिकानाम् आद्युदात्तो भवति। स्वाङ्गवाचिनां तावत्—कर्णाभ्यां चिबुकादधि। ओष्ठाविव मधु। इत्यादि ॥ शिटां तावत्—विश्वो विहायाः। इत्यादि ॥ स्वाङ्गशिटामिति किम्? घटः। अदन्तानामिति किम्? बाहू राजन्यः।

### प्राणिनां कुपूर्वम् ॥ ७ ॥

प्राणिनाम् ६।३ कुपूर्वम् १।१॥ फिषः, उदात्त इत्यनुवर्तते। प्राणिवाचिनां प्रातिपदिकानां कवर्गात् पूर्वम् अक्षरमुदात्तं भवति। तद्यथा—काकः। वृकः। खगः। विहगः। शुकः। चटकः॥

प्राणिनामिति किमर्थम्? क्षीरं सर्पिर्मधूदकम् ॥ कर्दमादित्वादुदकशब्दस्य द्वितीयमक्षरमुदात्तम्।

### खय्युवर्णं कृत्रिमाख्या चेत् ॥ ८ ॥

खयि ७।१ उवर्णम् १।१ कृत्रिमाख्या १।१ चेत् अ० ॥ फिषः, उदात्त, इत्यनुवर्तते। खयि परतः प्रातिपदिकस्य उवर्णम् उदात्तं भवति कृत्रिमाख्या चेद भवति। तद्यथा—कन्दुकः।

## उनर्वन्नन्तानाम् ॥ ९ ॥

उन—ऋ—वन्नन्तानाम् ६ । ३ ॥ फिष, आदिः, उदात्त इत्यनुवर्तते । उन प्रत्ययान्तस्य, ऋकारान्तस्य, वन् प्रत्ययान्तस्य, च प्रातिपदिकस्याद्युदात्तो भवति । उनप्रत्ययान्तस्य तावत् वरुणं वो रिशादसम् । ऋकारान्तस्य तावत्—स्वसारं त्वा कृणवै ॥ वन् प्रत्ययान्तस्य तावत्—पीवानं मेषम् ॥ 'पिता माता भ्रातर एनमाहुः' इत्यत्र पितृपदे छान्दसमन्तोदात्तत्वम् । मातृपदे चाम्बार्थत्वादन्तोदात्तत्वम् ।

## वर्णानां तणतिनितन्तानाम् ॥ १० ॥

वर्णानाम् ६ । ३ त—ण—ति—नि—तन्तानाम् ६ । ३ ॥ फिषः, आदिः, उदात्त इत्यनुवर्तते । अत्र अन्तशब्द प्रत्येकमभिसम्बध्यते । त—ण—ति—नि—त्—अन्तानां वर्णवाचकानां प्रातिपदिकानाम् आद्युदात्तो भवति । तान्तानां तावत्—एतः । णान्तानां तावत्—हरिणः । त्यन्तानां तावत्—शितिः । न्य न्तानां तावत्—पृश्निः । तन्तानां ताहत्—वरित् ॥ कथं श्वेतः ? घृतादित्वादन्तोदात्त इति समाधेहि ।

## ह्रस्वान्तस्य ह्रस्वमनृत् ताच्छील्ये ॥ ११ ॥

ह्रस्वान्तस्य ६ । १ ह्रस्वम् १ । १ अनृत् १ । १ ताच्छील्ये ७ । १ ॥ फिषः, आदिः, उदात्त इत्यनुवर्तते । ताच्छील्यं

तत्स्वभावता। ताच्छील्येऽर्थे वर्तमानस्य ऋकारभिन्नस्य ह्रस्वान्तस्य प्रातिपदिकस्य आद्यं ह्रस्वमक्षरमुदात्तं भवति। तद्यथा-मुनिः। कपिः॥ इह मुनिशब्दे मौनशीलत्वं कपिशब्दे च चलशीलत्व निहितम्॥ ह्रस्वान्तस्येति किम्? वधूः। ह्रस्वमिति किम्। प्राज्ञम्। अनृदिति किम्? नृशंसः। तृणकम्। ताच्छील्य इति किम्? जडः।

## अक्षस्यादेवनस्य॥ १२॥

अक्षस्य ६।१ अदेवनस्य ६।१॥ फिषः, आदिः उदात्त इत्यनुवर्तते। देवनः पाशकस्तत्प्रतिषेधः। अदेवने=पाशकार्थभिन्नस्याक्षस्य प्रातिपदिकस्य आद्युदात्तो भवति। तद्यथा-तस्य नाक्षः।

अदेवन इति किमर्थम्? अक्षैर्मा दीव्यः (१०।३४।१३)॥ अक्षशब्दो बिभीतक-मधुरलवण-कर्ष (षोडशमाषाः)-देवन-इन्द्रिय-चक्रार्थेषु वर्तते। इह तु द्यूताङ्गे देवने=पाशकेऽर्थे प्रतिषेधो विधीयते॥ पासा इति भाषायाम्।

## अर्धस्यासमद्योतने॥ १३॥

अर्धस्य ६।१ असमद्योतने ७।१॥ फिषः, आदिः उदात्त इत्यनुवर्तते। समद्योतनं विभागार्थ-प्रकाशनं तत्प्रतिषेधः। असमद्योतने=अविभागेऽर्थे वर्तमानस्य अर्धस्य प्रातिपदिकस्य आद्युदात्तो भवति। तद्यथा-अर्धो ग्रामस्य। खण्ड इत्यर्थः।

असमद्योतन इति किमर्थम्? अर्धं पिप्पल्याः। अर्धशब्दः खण्डार्थे पुंसि यथा—कम्बलस्यार्धः, खण्ड इत्यर्थः। अर्धशब्दो वाच्यलिङ्गेऽपि भवति यथा—अर्धा शाटी, अर्धः पटः, अर्धं वस्त्रम् इति। समेंऽशके (विभागे) अर्धशब्दो नपुंसकमेव यथा—अर्धं पिप्पल्याः। तस्यात्र प्रतिषेधो विधीयते।

## पीतद्र्वर्थानाम् ॥ १४ ॥

पीतद्रु—अर्थानाम् ६। ३॥ फिषः, आदिः, उदात्त इत्यनुवर्तते। पीतद्रु—अर्थानां प्रातिपदिकानाम् आद्युदात्तो भवति। यथा—पीतंद्रुः। सरंलः॥

पीतद्रुः, सरलः, पूतिकाष्ठम् इति पर्यायाः। पीतद्रुः= वृक्षविशेषः॥

## ग्रामादीनां च ॥ १५ ॥

ग्राम—आदीनाम् ६। ३ च अ०॥ फिषः, आदिः, उदात्त इत्यनुवर्तते। ग्राम—आदीनां प्रातिपदिकानामाद्युदात्तो भवति। यथा—ग्रामंः। सोमंः। यामंः। इत्यादि॥ इह आदिशब्दः प्रकारार्थे तेन आकृतिगणोऽयम्॥

## [1]लुबन्तस्योपमेयनामधेयस्य ॥ १६ ॥

लुबन्तस्य ६। १ उपमेय—नामधेयस्य ६। १॥ फिषः, आदिः, उदात्त इत्यनुवर्तते। उपमेयवाचकस्य लुबन्तस्य

१—स्फिगन्तस्येति पा०। स्फिक्=लुप्॥

प्रातिपदिकस्याद्युदात्तो भवति। तद्यथा—चञ्चा। शिवः॥ लुबन्तस्येति किम्। अग्निर्माणवकः। उपमेयेति किम्। वरणाः। अदूरभवश्चेति अण्। वरणादिभ्यश्च—इति तस्य लुप्। चञ्चा इत्यत्र 'लुम्मनुष्ये' (५।३।९८) इत्यनेन संज्ञायां विहितस्य कन् प्रत्ययस्य मनुष्येऽभिधेये लुप्। चञ्चेव मनुष्यः चञ्चा॥ शिव इत्यत्र च 'जीविकार्थे चापण्ये' (५।३।९९) इत्यनेन जीविकार्थं यदपण्यं तस्मिन्नभिधेये कन् प्रत्ययस्य लुप्। शिव इवायं प्रतिकृतिः शिवः। एवं चञ्चा—शिवयोरुपमेयवाचकत्वं बोध्यम्॥

न वृक्षपर्वतविशेषव्याघ्रसिंहमहिषाणाम्॥ १७॥

न अ०। वृक्ष—पर्वत—विशेष—व्याघ्र—सिंह—महिषाणाम् ६। ३॥ लुबन्तस्य उपमेयनामधेयस्य इति, फिषः, आदिः, उदात्त इति चानुवर्तते। विशेषशब्दश्च वृक्षपर्वताभ्यामभिसम्बध्यते। लुबन्तानामुपमेयनामधेयानां वृक्षविशेषाणां पर्वतविशेषाणां व्याघ्र—सिंह—महिषाणां च प्रातिपदिकानाम् आद्युदात्तो न भवति। वृक्ष विशेषाणां तावत्—ताल इव ताल॥ पर्वतविशेषाणां तावत्—मेरुरिव मेरुः॥ तथा च—व्याघ्रः। सिंहः। महिषः॥ विशेषग्रहणं किम्? वृक्षः। पर्वतः। पूर्वेणाद्युदात्तत्वम्।

अत्र सर्वत्र 'देवपथादिभ्यश्च' ( ५ । ३ । १०० ) इत्यनेन इवे प्रतिकृतौ संज्ञायां च विहितस्य कन्–प्रत्ययस्य लुप् । तथा च—

अर्चासु पूजनार्थासु चित्रकर्मध्वजेषु च ।
इवे प्रतिकृतौ लोपः कनो देवपथादिषु ॥

## राजविशेषस्य यमन्वा चेत् ॥ १८ ॥

राजविशेषस्य ६ । १ यमन्वा १ । १ चेत् अ० ॥ लुबन्तस्योपमेयनामधेयस्य इति, फिषः, आदिः, उदात्त इति चानुवर्तते । यमन्वा इति वृद्धसंज्ञा प्रोच्यते यस्याश्च पाणिनीये 'वृद्धिर्यस्याचामादिस्तद् वृद्धम्' इति लक्षणम् । उपमेयवाचकस्य लुबन्तस्य राजविशेषस्य प्रातिपदिकस्य आद्युदात्तो भवति वृद्धसंज्ञकं चेत् तद् भवति । तद्यथा—आङ्ग इवायम् आङ्गः ॥

'आङ्गः' इत्यत्र 'द्व्यञ्मगधकलिङ्गसूरमसादण्' ( ४ । १ । १७० ) इत्यनेन राजन्यर्थेऽण्–प्रत्ययः । ततो 'देवपथादिभ्यश्च' इत्यनेन कनो लुप् । आङ्ग इवायं प्रतिकृतिः—आङ्गः ॥ यमन्वेति किमर्थम् ? अङ्गाः । अत्र वृद्धत्वाभावादन्तोदात्तत्वम् ॥

अत्र आङ्ग इत्युदाहरणं चिन्त्यम् । तस्य 'जनपद शब्दाद्०' इत्यञन्तत्वेमाद्युदात्तसिद्धेः । कालिङ्ग इत्युदाहार्यम् । तत्र हि 'द्व्यञ्मगध०' इत्यण् । अन्ये तु लुबन्तस्येत्याद्यनुवर्त्यास्य विधित्वमेवेच्छन्ति । इति ज्ञानेन्द्रः ॥

## लघावन्ते द्वयोश्च बह्वषो गुरुः ॥ १९ ॥

लघौ ७ । १ अन्ते ७ । १ द्वयोः ६ । २ च अ० बह्वषः ६ । १ गुरुः । १ । १ ॥ फिष्, उदात्त इत्यनुवर्तते । अष् इति अच् पर्यायः । अन्ते एकाक्षरे लघौ सति, अथवाऽन्ते द्वयोरक्षरयोर्लघ्वोः सतोः, एवं विधस्य बह्वच्कस्य प्रातिपदिकस्य गुरु-अक्षरमुदात्तं भवति । अत्र वाऽर्थे चः पठितः ॥ अन्ते एकाक्षरे लघौ यथा—कल्याणम् । कल्याणम् । अन्ते द्वयोरक्षरयोर्लघ्वोर्यथा—कोलाहलः । कोलाहलः । अत्र प्रतिपदं गुरुद्वयम् । पर्यायेण गुरोरुदात्तत्वं मत्वा स्वराङ्कनं विहितम् । लघावन्त इति किम् ? वातप्रमी । बह्वष इति किम् ? देवः । गुरुरिति किम् ? किसलयम् ।

## स्त्रीविषयवर्णाक्षुपूर्वाणाम् ॥ २० ॥

स्त्रीविषय-वर्ण-अक्षुपूर्वाणाम् ६ । ३ ॥ फिषः, आदि,ः उदात्त इत्यनुवर्तते । स्त्रीविषयस्य, वर्णवाचकस्य अक्षुपूर्वस्य च प्रातिपदिकस्य आद्युदात्तो भवति । स्त्रीविषयस्य तावत्—मल्लिका ॥ वर्णवाचकस्य तावत्—श्येनी । हरिणी ॥ अक्षुपूर्वस्य तावत्—तरक्षुः ॥

अक्षुपूर्व इत्यत्र अक्षुशब्दात् पूर्वोऽस्ति यस्य सः अक्षुपूर्वः । इति व्यधिकरणो बहुव्रीहिः । तरक्षुः=मृगादनः । स च कुक्कुराकृतिः कृष्णरेखाचित्रितो मृगविशेषः ॥

## शकुनीनां च लघु पूर्वम् ॥ २१ ॥

शकुनीनाम् ६ । ३ च अ० लघु १ । १ पूर्वम् १ । १ ॥ फिषः, उदात्त इत्यनुवर्तते । शकुनिवाचकानां प्रातिपदिकाना मन्त्यात् पूर्वं लघु अक्षरमुदात्तं भवति । तद्यथा—कुक्कुटः । तित्तिरः ॥

"लघुपूर्वमिति बहुव्रीहिस्तु न, लघोरिति पञ्चमीनिर्देशेनैव सिद्धे पूर्वग्रहणवैयर्थ्यापत्तेः । लघोः पूर्वमिति तत्पुरुषोऽपि न सप्तमीनिर्देशेनैव सिद्धेः" इति ज्ञानेन्द्रः । लघु पूर्वमित्यसमस्तं पदद्वयम् ।

## नर्तुप्राण्याख्यायाम् ॥ २२ ॥

न अ० । ऋतु–प्राण्याख्यायाम् ७ । १ ॥ फिषः, आदिः, उदात्त इत्यनुवर्तते । इह आख्याशब्दः प्रत्येकमभिसम्बध्यते । ऋतु–आख्यायां प्राण्याख्यायां च वर्तमानस्य प्रातिपदिकस्य आद्युदात्तो न भवति । ऋतुआख्यायां तावत्—वसन्तः ॥ प्राण्याख्यायां तावत्—कृकलासः ॥ आद्युदात्तत्वे प्रतिषिद्धे प्राप्तमन्तोदात्तत्वं विधीयते ॥ कृकलासः=सरटः । स च लोके कुलकाट—नाम्ना प्रसिद्धः ॥

## धान्यानां च वृद्धक्षान्तानाम् ॥ २३ ॥

धान्यानाम् ६ । ३ च अ० वृद्ध–क्–षान्तानाम् ६ । ३ ॥ फिषः, आदिः, उदात्त इत्यनुवर्तते । वृद्धसंज्ञकानां ककारान्तानां

षकारान्तानां च धान्यवाचकानां प्रातिपदिकानाम् आद्युदात्तो भवति। ककारान्तानां तावत्—श्यामाकः। षकारान्तानां तावत्—राजमाषः॥ इह 'वृद्धिर्यस्याचामादिस्तद् वृद्धम्' इति श्यामाक-राजमाषयोर्वृद्धसंज्ञकत्वम्॥

## जनपदशब्दानामषन्तानाम्॥ २४॥

जनपदशब्दानाम् ६।३ अषन्तानाम् ६।३॥ फिषः, आदिः, उदात्त इत्यनुवर्तते। अषन्तानाम्=अजन्तानां जनपद-वाचकानां प्रातिपदिकानाम् आद्युदात्तो भवति। तद्यथा—केकयः॥ जनपदशब्दानामिति किम्? आम्रः। अषन्तानामिति किम्? दरत्।

"केकय इत्यत्र परत्वाद्यान्तस्यान्त्यात्पूर्वमिति स्वरेण भाव्यम्, अतः अङ्गाः, वङ्गा इत्युदाहर्तव्यम्" इति वासुदेवः॥ यत्तु 'यान्तस्यान्त्यात्पूर्वमित्यनेन परत्वादत्र भाव्यमिति, तन्न। बाध्य-सामान्यचिन्तामाश्रित्य तस्याप्यनेन बाधादित्याहुः। अङ्गाः, वङ्गा, इत्यप्युदाहार्यम्" इति ज्ञानेन्द्रः॥

## हयादीनामसंयुक्तलान्तानामन्तः पूर्वं वा॥ २५॥

हयादीनाम् ६।३ असंयुक्त-लान्तानाम् ६।३ अन्तः १।१ पूर्वम् १।१ वा अ०॥ फिषः, उदात्त इत्यनुवर्तते। हय इति हल् पर्यायः। असंयुक्तलकारान्तानां हलादीनां प्राति-पदिकानाम् अन्त्यात् पूर्वमक्षरं विकल्पेन उदात्तं भवति। तद्यथा—

हलः । हुलः । पलुलम् । पुलुलम् । शलुलम् । शुलुलम् ॥
पललं मांसं शललं तु शल्यक-लोम ॥

हयादीनामिति किमर्थम् ? पकुलः । असंयुक्तलान्तानामिति किमर्थम् ? मुल्लः ॥ असंयुक्तो लकारोऽन्ते येषां ते असंयुक्तलान्ताः इति त्रिपदबहुव्रीहिर्विज्ञेयः ॥

अत्र केचित् 'जनपदशब्दानाम्' इत्यनुवर्तयन्ति । तेषां मते पञ्चालाः, कोसला इत्युदाहरणम् ।

## इगन्तानां च द्व्यषाम् २६ ॥

इगन्तानाम् ६ । ३ च अ० द्वि-अषाम् ६ । ३ ॥ फिषः, आदिः, उदात्त इत्यनुवर्तते । अष् इति अच् पर्यायः । द्व्यषाम्= द्वि-अज्वताम् इगन्तानां प्रातिपदिकानाम् आद्युदात्तो भवति । तद्यथा-कृषिः ॥

इहापि जनपदशब्दानामिति केचिदनुवर्तयन्ति । तेषां मते कुरवः चेदय इत्युदाहरणम् । जनपदशब्दानामित्येव कृषिः । अक्षैर्मा दीव्यः कृषिमित्कृषस्व ॥ ये जनपदशब्दानामिति नानुवर्तयन्ति तेषां कृषिशब्दस्यान्तोदात्तत्वं छान्दसत्वात्सिद्धम् ।

इति श्रीसुदर्शनदेवाचार्यविरचिते फिट्सूत्रप्रदीपे
द्वितीयः पादः ॥

---

# अथ तृतीयः पादः

## अथ द्वितीयं प्रागीषात् ॥ १ ॥

अथ अ० । द्वितीयम् १ । १ प्राक् १ । ईषात् ५ । १ ॥ फिषः, उदात्त इत्यनुवर्तते । 'ईषान्तस्य हयादेरादिर्वा' ( ३ । १७) इति वक्ष्यति । प्राग् एतस्मात्, प्रातिपदिकस्य द्वितीयमक्षरमुदात्तं भवतीत्यधिकारोऽयम् ॥

अथशब्दः प्रातिपादिकस्य द्वितीयमक्षरमुदात्तं भवतीति-प्रकरणारम्भद्योतकः ।

## त्र्यचां प्राङ् मकरात् ॥ २ ॥

त्रि-अचाम् ६ । ३ प्राक् १ । १ मकरात् ५ । १ फिषः, उदात्त इत्यनुवर्तते । त्रि-अज्वतां प्रातिपदिकानां द्वितीयमक्षर-मुदात्तं भवति 'मकरवरूढ०' ( ३ । ८ ) इत्यतः प्राग् अधिकारोऽयं वेदितव्यः ॥

## स्वाङ्गानामकुर्वादीनाम् ॥ ३ ॥

स्वाङ्गानाम् ६ । ३ अकु-र्-वादीनाम् ६ । ३ ॥ फिषः, द्वितीयम्, उदात्त इति, त्र्यचाम् इति चानुवर्तते । कवर्ग-रेफ-वकारादिवर्जितानां स्वाङ्गवाचिनां त्रि-अज्वतां प्रातिपदिकानां द्वितीयमक्षरमुदात्तं भवति । तद्यथा—ललाटम् ॥

अकु—र्—वादीनामिति किमर्थम् ? कपोलः । रसना । वदनम् ॥ 'लघावन्ते०' इति कपोलशब्द मध्योदात्तः । 'स्वाङ्ग-शिटामदन्तानाम्' इति रसना—वदनशब्दावाद्युदात्तौ ॥

मादीनां च ॥ ४ ॥

मादीनाम् ६ । ३ च अ० ॥ फिषः, द्वितीयम्, उदात्त, त्र्यचाम् इति चानुवर्तते । मकारादीनां त्रि—अज्वतां प्रातिपदिकानां द्वितीयमक्षरमुदात्तं भवति । तद्यथा—मकरः मलयः । महेन्द्रः । इत्यादि ॥

शादीनां शाकानाम् ॥ ५ ॥

शादीनाम् ६ । ३ शाकानाम् ६ । ३ ॥ फिषः, द्वितीयम्, उदात्त इति, त्र्यचाम् इति चानुवर्तते । शकारादीनां शाकवाचकानां त्रि—अज्वतां प्रातिपदिकानां द्वितीयम् अक्षरमुदात्तं भवति । तद्यथा—शीतन्यां ॥ केचित् सादीनामिति दन्त्यादिं पठित्वा सर्षपा इत्युदाहरन्ति । तन्न । पान्तानां गुर्वादीनामिति वक्ष्यमाण-सूत्रेण तस्य सिद्धेः ।

पान्तानाम् गुर्वादीनाम् ॥ ६ ॥

पान्तानाम् ६ । ३ गुरु—आदीनाम् ६ । ३ ॥ फिषः, द्वितीयम्, उदात्त इति; त्र्यचाम् इति चानुवर्तते । गुरु—अक्षर-आदीनां पकारान्तानां त्रि—अज्वतां प्रातिपदिकानां द्वितीयम-क्षरमुदात्तं भवति । तद्यथा—पादपः ॥ आतपः । गुर्वादीनामिति

किमर्थम् ? अनूपम् । अनोरप्रधान कनीयसीत्यन्तोदात्तत्वम् । त्र्यचामिति किमर्थम् ? नीपम् । 'नेरनिधाने' इत्यन्तोदात्तत्वम् ।

## युतान्यण्यन्तानाम् ॥ ७ ॥

युत—अनि—अणि—अन्तानाम् ६ । ३ ॥ फिषः, द्वितीयम्, उदात्त इति; त्र्यचाम् इति चानुवर्तते । इह अन्तशब्दः प्रत्येकमभिसम्बध्यते । त्रि—अज्वतां युत—अनि—अणि—अन्तानां प्रातिपदिकानां द्वितीयम् अक्षरमुदात्तं भवति । युतान्तानां तावत्—अयुतम् । अन्यन्तानां तावत्—धमनिः अण्यन्तानां तावत्—विपणिः ॥

## मकरवरूढपारेवतवितस्तेक्ष्वार्जिद्राक्षाकलो-माकाष्ठापेष्ठाकाशीनामादिर्वा ॥ ८ ॥

मकर—वरूढ—पारेवत—वितस्ता—इक्षु—आर्जि–द्राक्षा-कला—उमा—काष्ठा । पेष्ठा–काशीनाम् ६ । ३ । आदिः १ । १ वा अ० ॥ फिषः, द्वितीयम्, उदात्त इत्यनुवर्तते । मकर—वरूढ—पारेवत— वितस्ता— इक्षु—आर्जि—द्राक्षा—कला—उमा काष्ठा । पेष्ठा—काशीनां प्रातिपदिकानाम् आद्यं द्वितीयं वाऽक्षर-मुदात्तं भवति । तद्यथा—मकर मकरः ॥ वरूढः । वरूढः ॥ पारेवतः । पारेवतः ॥ वितस्ता । वितस्ता ॥ इक्षुः । इक्षुः ॥ आर्जिः । आर्जिः ॥ द्राक्षा । द्राक्षा ॥ कला । कला ॥ उमा । उमा ॥ काष्ठा । काष्ठा ॥ पेष्ठा । पेष्ठा ॥ काशिः । काशिः ॥

"काशीनानामिति वक्तव्ये काशीनामितिपाठश्छान्दसः" इत्युक्तिर-रमणीया काशीनाशब्दस्यानुपलब्धेः ॥

मकरः=शिशुमारः ॥ वरूढः=विशेषजातिः ॥ पारेवतः=खर्जूरभेदः ॥ वितस्ता=नदीविशेषः ॥ इक्षुः=रसालः ॥ आर्जिः=ऋजुनीतिः ॥ द्राक्षा=मधुरसा ॥ कला=चन्द्रमण्डलस्य षोडशो भागः ॥ उमा=पार्वती, अतसी वा ॥ काष्ठा=उत्कर्षः, स्थितिः, मर्यादा, दिक् च ॥ पेष्ठा=पेषणी ॥ काशिः=मुष्टिः ॥

## छन्दसि च ॥ ९ ॥

छन्दसि ७ । १ च अ० ॥ फिषः, द्वितीयम्, आदि, वा, उदात्त इत्यनुवर्तते । छन्दसि च विषये मकरादीनाम् प्रातिपदिकानाम् आद्यं द्वितीयं वाऽक्षरमुदात्तं भवति । तद्यथा—मकरः । मकरः इत्यादि ।

## कर्दमादीनां च ॥ १० ॥

कर्दम—आदीनाम् ६ । ३ च अ० ॥ फिषः, द्वितीयं, आदि, वा, उदात्तं इत्यनुवर्तते । कर्दम—आदीनां प्रातिपदिकानाम् आद्यं द्वितीयं वाऽक्षरमुदात्तं भवति । तद्यथा—कर्दमः । कर्दमः । इत्यादि । कर्दमः । कुलटा । उदकम् । गान्धारिः । इति कर्दमादिषु द्रष्टव्याः ॥

## सुगन्धितेजनस्य ते वा ॥ ११ ॥

सुगन्धितेजनस्य ६ । १ ते—इत्यविभक्तिको निर्देशः, वा अ० ॥ फिषः, द्वितीयम्, आदि, वा, उदात्त इत्यनुवर्तते ।

सुगन्धितेजनस्य प्रातिपदिकस्य 'ते' इत्यक्षरम् आद्यं द्वितीयं वाऽक्षरमुदात्तं भवति। तद्यथा—सुगन्धितेजनः। अत्र ते—अक्षरस्योदात्तत्वम्॥ सुगन्धितेजनः। अत्राद्युदात्तत्वम्॥ सुगन्धितेजन। अत्र द्वितीयाक्षरस्योदात्तत्वम्॥ सुगन्धितेजनः= सुगन्धिवेणुः। तेजन इति वेणुपर्यायः॥

नपः फलान्तानाम्॥ १२॥

नपः ६।१ फलान्तानाम् ६।३॥ फिषः, द्वितीयम्, आदि, वा, उदात्त इत्यनुवर्तते। 'नप्' इति नपुंसकपर्यायः। नपुंसकलिङ्गानां फलान्तानां प्रातिपदिकानाम् आद्यं द्वितीयं वाऽक्षरमुदात्तं भवति। तद्यथा—राजादनफलम्। राजादनफलम्॥ नप इति किमर्थम्? दासीफलो वृक्षः।

अस्य स्थाने 'ले फो नपः' इति केचित् पठन्ति। तस्यायमर्थः—नपुंसकलिङ्गस्य प्रातिपदिकस्य लकारे परतः फ—शब्द उदात्तो भवति। तद्यथा—सुफलम् इत्यादि।

यान्तस्यान्त्यात्पूर्वम्॥ १३॥

यान्तस्य ६।१ अन्त्यात् ५।१ पूर्वम् १।१॥ फिषः, उदात्त, इत्यनुवर्तते। यकारान्तस्य प्रातिपदिकस्य अन्त्यात् पूर्वतनमक्षरम् उदात्तं भवति। तद्यथा—कुलायः।

थान्तस्य च नालघुनी॥ १४॥

थान्तस्य ६।१ च अ० ना—लघुनी १।२॥ ना च लघु च ते नालघुनी (इतरेतरद्वन्द्वः)। फिषः, उदात्त इत्यनुवर्तते।

थकारान्तस्य प्रातिपदिकस्य 'ना' इत्यक्षरं लघु—अक्षरं च क्रमश उदात्तं भवति । तद्यथा—सनाथा सभा । अत्र ना—अक्षर—स्योदात्तत्वम् । सनाथा सभा । अत्र लघुअक्षरस्य सकारस्योदात्तत्वम् ॥

## शिशुमारोदुम्बरबलीवर्दोष्ट्रारपुरूरवसाम् ॥ १५ ॥

शिशुमार—उदुम्बर—बलीवर्द — उष्ट्रार —पुरूरवसाम् ६ । ३ ।। फिषः, द्वितीयम्, अन्त्यात् पूर्वं वा उदात्त इत्यनुवर्तते । शिशुमार—उदुम्बर—बलीवर्द—उष्ट्रार—पुरूरवसां प्रातिपदिकानां द्वितीयम् अन्त्यात् पूर्वतनं वाऽक्षरमुदात्तं भवति । तद्यथा—शिशुमारः । शिशुमारः ॥ उदुम्बरः । उदुम्बरः ॥ बलीवर्दः । बलीवर्दः ॥ उष्ट्रारः । उष्ट्रारः ॥ पुरूरवाः । पुरूरवाः ॥

शिशुमार=मकरः । उदुम्बरः=जन्तुफलः, ताम्रकं वा । बलीवर्दः=वृषभः । उष्ट्रारः=उष्ट्रावरोधकः । पुरूरवाः=चन्द्रवंशीराजकुलप्रवर्तकः ।

## सांकाश्यकाम्पिल्यनासिक्यदार्वाघाटानाम् ॥ १६ ॥

सांकाश्य–काम्पिल्य–नासिक्य–दार्वाघाटानाम् ६ । ३ ॥ फिषः, द्वितीयम्, उदात्त इति, मण्डूकप्लुत्या च आदि र्वा इत्यनुवर्तते । सांकाश्य—काम्पिल्य—नासिक्य—दार्वाघाटानां प्रातिपदिकानाम् आद्यं द्वितीयं वाऽक्षरमुदात्तं भवति । तद्यथा—

सांकाश्यः । सांकाश्यः ॥ काम्पिल्यः । काम्पिल्यः ॥ नासिक्यः । नासिक्यः ॥ दार्वाघाटः । दार्वाघाटः ।

सांकाश्य—काम्पिल्य—नासिक्याः = नगर—विशेषाः ॥ दार्वाघाटः = काष्ठकुट्टः ॥

ईषान्तस्य हयादेरादिर्वा ॥ १७ ॥

ईषान्तस्य ६।१ हयादेः ६।१ आदिः १।१ वा अ० ॥ फिषः, द्वितीयम्, उदात्त इत्यनुवर्तते । हयादिः = हलादिरित्यर्थः । ईषान्तस्य हलादेः प्रातिपदिकस्य आद्यं द्वितीयं वा ऽक्षरमुदात्तं भवति । तद्यथा—हलीषा । हलीषा ॥ लाङ्गलीषा । लाङ्गलीषा ॥

हल-लाङ्गलशब्दौ सीरपर्यायौ । ईषा = लाङ्गलदण्डः । हलीषा=हलदण्ड इत्यर्थः ॥

उशीरदासेरकपालपलालशैवालश्यामाकशारीर-शरावहृदयहिरण्यापत्यदेवराणाम् ॥ १८ ॥

उशीर–दासेर–कपाल–पलाल-शैवाल-श्यामाक-शारीर-शराव-हृदय-हिरण्य-अपत्य-देवराणाम् ६।३ ॥ फिषः, आदिः, उदात्त इत्यनुवर्तते । उशीर-दासेर-कपाल-पलाल-शैवाल-श्यामाक-शारीर-शराव-हृदय-हिरण्य-अपत्य-देवराणां प्रातिपदिकानाम् आद्यमक्षरमुदात्तं भवति। तद्यथा—उशीरम् । दासेरः । कपालः । पलालः । शैवालः । श्यामाकः । शारीरः । शरावः । हृदयम् । हिरण्यम् । अपत्यम् । देवरः ॥

उशीरम्=वीरणमूलम्, वीरणं च तृणभेदः ॥ दासेरः=दासः ॥ कपालः=कर्परः (शिरोऽस्थिखण्डः) ॥ पलालः=सकाण्डो निष्फलः (व्रीहिः) ॥ शैवालः = 'काई' इति प्रसिद्धम् ॥ श्यामाकः=तृणप्रमुखः ॥ शारीरः=आत्मा ॥ शरावः=वर्धमानकः पात्रभेदः ॥ हृदयम्=स्वान्तम् ॥ अपत्यम्=पुत्रो दुहिता च ॥ देवरः=देवा स्वामिनो भ्राता इत्यर्थः ॥

महिष्यषाढयोर्जायेष्टकाख्या चेत् ॥ १६ ॥

महिषी-अषाढयोः ६।२ जाया-इष्टकाख्या १।१ चेत् अ० ॥ फिषः, आदिः, उदात्त इत्यनुवर्तते । महिषी-अषाढयोः प्रातिपदिकयोः आद्यमक्षरमुदात्तं भवति । यथासंख्यं जायाख्या इष्टकाख्या चेद् भवति । तद्यथा—महिषी जाया ॥ अषाढा इष्टका । अषाढा उपदधाति ।

॥ इति श्रीसुदर्शनदेवाचार्यविरचिते फिट्सूत्रप्रदीपे
तृतीयः पादः ॥

———

## ॥ अथ चतुर्थः पादः ॥

**शकटिशकट्योरक्षरमक्षरं पर्यायेण ॥ १ ॥**

शकटि-शकट्योः ६।२ अक्षरम् १।१ अक्षरम् १।१ पर्यायेण ३।१ ॥ फिषः, उदात्त इत्यनुवर्तते । शकटि-शकट्योः प्रातिपदिकयोः पर्यायेण अक्षरमक्षरमुदात्तं भवति । तद्यथा—शकटिः । शकटिः । शकटिः ॥ शकटी । शकटी । शकटी ॥

अक्षरम् अक्षरम् इति वीप्सायां द्विर्वचनम् ॥

**गोष्ठजस्य ब्राह्मणनामधेयस्य ॥ २ ॥**

गोष्ठजस्य ६।१ ब्राह्मण-नामधेयस्य ६।१ ॥ फिषः, उदात्त इति; अक्षरमक्षरं पर्यायेण इति चानुवर्तते । ब्राह्मणवाचकस्य गोष्ठजस्य प्रातिपदिकस्य पर्यायेण अक्षरमक्षरमुदात्तं भवति । तद्यथा—गोष्ठजो ब्राह्मणः । गोष्ठजो ब्राह्मणः । गोष्ठजो ब्राह्मणः ॥

ब्राह्मणनामधेयस्य इति किमर्थम् ? गोष्ठजः पशुः । 'गतिकारकोपपदात् कृत्' (६।२।१३९) इति कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वम् ॥

**पारावतस्योपोत्तमवर्जम् ॥ ३ ॥**

पारावतस्य ६।१ उपोत्तमवर्जम् १।१ ॥ फिषः, उदात्त इति; अक्षरमक्षरं पर्यायेण इति चानुवर्तते । त्रिप्रभृतीनामन्त्याक्षरम्

उत्तमम्, उत्तमस्य समीपम् उपोत्तमम् । पारावतस्य प्रातिपदिकस्य पर्यायेण अक्षरमक्षरम् उदात्तं भवति, उपोत्तममक्षरं वर्जयित्वा । तद्यथा—पारावतः । पारावतः ॥ अत्र उपोत्तमं वकारः, तस्योदात्तभावमाश्रित्य स्वराङ्कनं न ॥ पारवतः=कपोत इत्यर्थः ॥

धूम्रजानु, मुञ्जकेश, कालवाल, स्थालीपाकानाम-धूजलस्थानाम् ॥ ४ ॥

धूम्रजानु—मुञ्जकेश—कालवाल—स्थालीपाकानाम् ६ । ३ अधू—ज—स—स्थानाम् ६ । ३ ॥ फिष, उदात्त इति; अक्षरमक्षर पर्यायेण इति चानुवर्तते । धूम्रजानु—मुञ्जकेश—कालवाल—स्थालीपाकानां प्रातिपदिकानां पर्यायेण अक्षरमक्षरमुदात्तं भवति । धूम्रजानु—आदिषु वर्तमानानां धू—ज—ल—स्थानामक्षराणां चोदात्तत्वं पर्यायप्राप्तं न भवति । तद्यथा—धूम्रजानुः । धूम्रजानुः । धूम्रजानुः ॥ मुञ्जकेशः । मुञ्जकेशः । मुञ्जकेशः ॥ कालवालः । कालवालः ॥ स्थालीपाकः । स्थालीपाकः । स्थालीपाकः ॥

कपिकेशहरिकेशयोश्छन्दसि ॥ ५ ॥

कपिकेश—हरिकेशयोः ६ । २ छन्दसि ७ । १ ॥ फिष, उदात्त इति; अक्षरमक्षरं पर्यायेण इति चानुवर्तते । छन्दसि विषये कपिकेश—हरिकेशयोः प्रातिपदिकयोः पर्यायेण अक्षरमक्षरमुदात्तं भवति । कपिकेशस्य तावत्—कपिकेशः । कपिकेशः । कपिकेशः ।

कापिकेशः ।। हरिकेशस्य तावत्—हारिकेशः । हरिकेशः । हरिकेशः । हरिकेशः ।।

छन्दसीति किम् ? कपिकेशः । हरिकेशः । भाषायां बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरत्वम् । कपिशब्दोऽन्तोदात्तः । इनन्तत्वात् हरिशब्द आद्युदात्तः ।

न्यङ्स्वरौ स्वरितौ ।। ६ ।।

न्यङ्—स्वरौ १ । २ स्वरितौ १ । २ ।। न्यङ्—स्वरौ प्रातिपदिकौ स्वरितस्वरौ भवतः । तद्यथा—न्यङ्ङुत्तानः । व्यंचक्षयत्स्वः ।। न्यङ्=वामनः, नीचः, खर्वः, ह्रस्व इति पर्यायाः ।। स्वः=स्वर्गः परलोको वा ।।

न्यर्बुदव्यल्कशयोरादिः ।। ७ ।।

न्यर्बुद—व्यल्कशयोः ६ । २ आदिः १ । १ ।। फिषः, स्वरित इति चानुवर्तते । न्यर्बुद—व्यल्कशयोः प्रातिपदिकयोराद्यमक्षरं स्वरितो भवति । तद्यथा—न्यर्बुदः । व्यल्कशः ।

तिल्यशिक्यकाश्मर्यधान्यकन्याराजन्यमनुष्याणामन्तः ।। ८ ।।

तिल्य—शिक्य—काश्मर्य—धान्य—कन्या—राजन्य—मनुष्याणाम् ६ । ३ अन्तः १ । १ ।। फिषः, स्वरित इति

चानुवर्तते । तिल्य—शिक्य—काश्मर्य—धान्य—कन्या—राजन्य—मनुष्याणां प्रातिपदिकानामन्त्यमक्षरं स्वरितो भवति । तद्यथा—तिल्यम् । शिक्यम् । काश्मर्यः । धान्यः । कन्या । राजन्यः । मनुष्यः ।

तिल्यम्=तैलीनम्, तिलानां भवनं क्षेत्रमित्यर्थः ॥ शिक्यम्=काचः, विहङ्गिकायां यदालम्बते तत् ॥ काश्मर्यः=मधुपर्णिका वनौषधिविशेषः ॥ शेषं स्पष्टम् ॥

## बिल्वभक्ष्यवीर्याणि च्छन्दसि ॥ ९ ॥

बिल्व—भक्ष्य—वीर्याणि १ । ३ छन्दसि ७ । १ ॥ फिषः, अन्तः, स्वरित इति चानुवर्तते । छन्दसि विषये बिल्व—भक्ष्य—वीर्याणां प्रातिपदिकानाम् अन्त्यमक्षरं स्वरितो भवति । तद्यथा— बिल्वः । भक्ष्यम् । वीर्यम् ॥ भाषायां बिल्वशब्दः स्वरितान्तो ऽन्तोदात्तो वा भक्ष्यवीर्यशब्दौ चाद्युदात्तौ ॥

## त्वत्त्वसमसिमेत्यनुच्चानि ॥ १० ॥

त्वत्—त्व—सम—सिम इत्यविभक्तिको निर्देशः । इति अ० । अनुच्चानि १ । ३ ॥ अनुच्चानि सर्वानुदात्तानीत्यर्थः । त्वत्, त्व, सम, सिम इत्येतानि प्रातिपदिकानि अनुच्चानि=सर्वानुदात्तानि भवन्ति । तद्यथा—स्तरीरुत्वत् ॥ उत त्वः पश्यन् ॥ नभन्तामन्यके समे ॥ सिमस्मै ।

त्वत्–इति युष्मदः पञ्चम्येकवचनम् । त्वः=अन्यपर्यायः ॥ समः=तुल्यपर्यायः सर्वपर्यायश्च ॥ सिमः=सर्वपर्यायः ॥

## सिमस्याथर्वणेऽन्त उदात्तः ॥ ११ ॥

सिमस्य ६ । १ आथर्वणे ७ । १ अन्तः १ । १ उदात्तः १ । १ ॥ आथर्वणे अथर्ववेदे सिमस्य प्रातिपदिकस्य अन्त्यमक्षरमुदात्तं भवति । तद्यथा–रात्री वासस्तनुते सिमस्मैं ( अथर्व० २० । १३२ । १ ) ॥

"आथर्वण इति प्रायिकम् तत्र दृष्टस्येत्येवं परं वा । तेन वासस्तनुते सिमस्मै इत्यृग्वेदेऽपि भवत्येव" इति दीक्षितः ॥

## निपाता आद्युदात्ताः ॥ १२ ॥

निपाताः १ । ३ आद्युदात्ताः १ । ३ ॥ पाणिनीये 'प्राग्रीश्वरान्निपाताः' इति निपाताधिकारः । तत्र ये निपातसंज्ञकाः शब्दास्ते आद्युदात्ता भवन्ति । तद्यथा—उरीं । उररी । साक्षात् । इत्यादि ॥

## उपसर्गाश्चाभिवर्जम् ॥ १३ ॥

उपसर्गाः १ । ३ च अ० अभिवर्जम् १ । १ ॥ प्रादयः शब्दाः क्रियायोगे उपसर्गसंज्ञका भवन्ति । ते चोपसर्गा अभि–वर्जम् आद्युदात्ता भवन्ति । ते चेमे—प्र । परा । अप । सम् । अनु । अव । निस् । दुस् । वि । आङ् । नि । अधि । अपि ।

अति। सु। उत्। [ अभि ]। प्रति। परि। उप॥ एषां क्रियायोगे आद्युदात्तत्वम्॥

## एवादीनामन्तः॥ १४॥

एवादीनाम् ६। ३ अन्तः १। १॥ 'चादयो ऽसत्त्वे' इत्यत्र एवादयः पठ्यन्ते। तेषाम् एवादीनमान्त उदात्तो भवति। तद्यथा—एव। एवम्। नूनम्। इत्यादि॥

## वावादीनामुभावुदात्तौ॥ १५॥

वाव-आदीनाम् ६।३ उभौ १।२ उदात्तौ १।२॥ वावादीनां शब्दानाम् उभावुदात्तौ भवतः। तद्यथा—वाव॥

## चादयोऽनुदात्ताः॥ १६॥

चादयः १।३ अनुदात्ताः १।३॥ चादयः शब्दा अनुदात्ता भवन्ति। तद्यथा—च। वा। ह। अह इत्यादि॥

## यथेति पादान्ते॥ १७॥

यथा अ०। इति अ०। पादान्ते ७।१॥ पादान्ते वर्तमानं यथेति पदमनुदात्तं भवति। तद्यथा—तं नेमिमृभवो यथा॥

पादान्त इति किमर्थम्? यथा नो अदितिः करत् पश्वे नृभ्यो यथा गवे यथा तोकाय रुद्रियम्' ( ऋ० १।४३।२ )। इह पादादौ वर्तमानस्य 'यथा'-पदस्यानुदात्तत्वं न।

## प्रकारादिद्विरुक्तौ परस्यान्त उदात्तः ॥ १८ ॥

प्रकारादिद्विरुक्तौ ७।१ परस्य ६।१ अन्तः १।१ उदात्तः १।१॥ 'प्रकारे गुणवचनस्य' ( ८।१।१२ ) इति द्विर्वचनं विधीयते। तत्र प्रकारादिद्विरुक्तौ सत्यां यत्परं तस्यान्त उदात्तो भवति। तद्यथा—प्रकारे = सादृश्ये वर्तमानस्य गुणवचनस्य शब्दस्य द्वे भवतः। पटु पटुः। मृदु मृदु। पण्डित पण्डितः इत्यादि॥

॥ आनुपूर्व्ये द्वे भवत इति वक्तव्यम् ॥ मूले मूले स्थूलाः। अग्रे अग्रे सूक्ष्माः। ज्येष्ठं ज्येष्ठं प्रवेशय। इत्यादि ॥ 'प्रकारे वचनस्य' (८।१।१२) इत्यत्र अस्य प्रपञ्चो द्रष्टव्यः॥

## शेषं सर्वमनुदात्तम् ॥ १९ ॥

शेषम् १।१ सर्वम् १।१ अनुदात्तम् १।१॥ द्विरुक्तमित्यनुवर्तते। शेषं सर्वं द्विरुक्तं पदम् अनुदात्तं भवति। तद्यथा—पचति पचति॥ जल्पति जल्पति। ग्रामो ग्रामो रमणीयः॥

अत्र 'नित्यवीप्सयोः' ( ८।१।४ ) इति द्विरुच्यते। तस्य द्विरुक्तस्य स्वराङ्कनविधिरत्र प्रतिपादितः।

॥ इति श्रीसुदर्शनदेवाचार्यविरचिते फिट्सूत्रप्रदीपे
चतुर्थः पादः ॥

॥ समाप्तश्चायं फिट्सूत्रप्रदीपः ॥

# शब्दानुक्रमणिका

# लेखक का संक्षिप्त परिचय

"फिट्सूत्रप्रदीप" के लेखक श्री पं० सुदर्शनदेवजी आचार्य ने माघ शुक्ला पञ्चमी सं० १९९१ वि० को ग्राम बालन्द, जिला रोहतक निवासी श्री महाशय शिवदत्तजी आर्य एवं श्रीमती रजकांदेवी के घर को सुशोभित किया।

ऋषिभक्त पिता ने इस होनहार पुत्र को प्राथमिक शिक्षा के उपरान्त आर्षप्रणाली से वेदादि शास्त्रों के अध्ययनार्थ ७ फरवरी १९४७ ई० को गुरुकुल झज्जर में भेज दिया। वहां पर आपने पूज्य गुरुदेव श्री आचार्य भगवान्देवजी के संरक्षण में महावैयाकरण पण्डित श्री विश्वप्रियजी शास्त्री आदि विद्वानों से शिक्षा, व्याकरण, निरुक्त, छन्दःशास्त्र, काव्यालङ्कार, दर्शन, उपनिषद्, गीता, रामायण, मनुस्मृति आदि का अध्ययन किया।

तत्पश्चात् गुरुकुल झज्जर में ही आप प्रधानाध्यापक के रूप में अध्यापन-कार्य करते रहे। सन् १९५७ में पंजाब विश्वविद्यालय से शास्त्री तथा १९६२ में व्याकरणाचार्य परीक्षा विशेष योग्यतापूर्वक उत्तीर्ण की है। सन् १९६७ में गुरुकुल कांगड़ी विश्वविद्यालय में एम० ए० (संस्कृत) परीक्षा में आप सर्वप्रथम रहे हैं। व्याकरण तथा संस्कृत साहित्य में प्रारम्भ से ही आपकी विशेष रुचि और गति है।

आर्य प्रतिनिधि सभा द्वारा संचालित उपदेशक महाविद्यालय (यमुनानगर, भटिण्डा) में आप ७ वर्ष तक प्रधान अध्यापक रहे हैं और इस समय आप राजकीय उच्चतर माध्यमिक विद्यालय चरखी दादरी (महेन्द्रगढ़) में संस्कृत प्राध्यापक नियुक्त हैं।